महाप्रकरणाद्दर्शपूर्णमासाङ्गम् । ये तु पश्चात्तना गुणास्ते पुनर्वचनादेव दूरस्थानुवादेनैव द्वादशोपसत्त्ववत्साभिधेन्यनुवादेन विधीयन्त इति भट्टमतेन सिद्धान्तितम् । वस्तुतस्तु या तस्य भगिनीत्यनेन सोदराभावे यो भगिन्यधिकारः संसृष्टिधने प्रतीयते तस्यैवाव्यवहितस्यानपत्यस्येति वाक्यशेषस्थेनायमिति सर्वनाम्ना परामर्शस्तत्र च न कोऽपि विरोधः। चन्द्रिकायामप्येवमेवोक्तम् । अविभक्तापुत्त्रपतिस्वामिककृत्स्नधनग्रहणान्तु पत्न्या कात्यायनवचनविरुद्धम् । यदाह ॥

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी ।
अविभक्ते धनांशे तु प्राप्नोत्यामरणान्तिकम् ॥

तुशब्दो वाशब्दार्थे । तथा चायमर्थः। ग्रासाच्छादनमेव साचाल्लभते आमरणान्तिकं यावज्जीवं यावता धनेन जीवनं स्वाधिकारिकमावश्यकञ्च कर्म सिद्ध्यति तावदन्तं धनांशं वा प्राप्नोति । धनांशमामरणान्तिकमित्युक्तेः कृत्स्नधनमविभक्तस्य पत्युर्लभत इति निरस्तम् । न च स्त्रीशब्दश्रवणात्पत्नीव्यतिरिक्तस्त्रीपरमिदमपीति वाच्यम् । अविभक्त इति विशेषणानर्थक्यापत्तेः। विभक्तेऽपि भर्तरि पत्नीभिन्नाया अपुत्त्राया भरणमात्रोक्तेः । अतएव कृतेऽप्यंशइत्यनुवृत्तौ बृहस्पतिः ।

प्रदद्यात्त्वेव पिण्डं च क्षेत्रांशं वा यदीच्छति ।

अस्य च व्याख्यानं स्मृतिचन्द्रिकायाम् । पिण्डग्रहणमशनाच्छादनोपलक्षणार्थन्तत्पर्य्याप्तं धनन्तत्साम्पादकं* क्षेत्रांशं वा स्वरुच्या भर्तृंशग्राहंपत्नीव्यतिरिक्तविधवायै भ्रात्रादिस्तद्धनग्राही प्रदद्यात् । एवकारः प्रदानस्यावश्यकत्वार्थं इति । एतद्विषयकमेव नारदवचनम् ।

यावत्यो विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा ।

* तत्सम्पादकं—पा० १ पुस्तके ।

गोत्रजेनापि वान्येन भर्त्तव्याच्छादनाशनैरिति ॥

भर्तृधनग्राहिणीति सर्वत्र शेषः। धनग्रहनिमित्तत्वाद्भरणस्य। साध्व्य इत्यनेन सर्वत्र साध्वीनामेव भरणमसाध्वीनान्तु पत्नीनामपि न तदपि। व्यभिचारिणीष्वित्यादिग्रासमात्रदानमपि न इति व्यभिचारिणीष्विति प्रागुक्तनारदवचनवाक्यशेषादिभ्यः। अतएव साध्वीनां जीवनार्थं श्वशुरादिभिर्दत्तमन्यैरपि दायादैर्नापहरणीयमित्यप्याह बृहस्पतिः।

स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु।

न तच्छक्यमपाहर्तुन्दायादैरिह कर्हिचिदिति ॥

अन्यादृशीनान्तु दत्तमप्याहर्त्तव्यमित्याह कात्यायनः ॥

भोक्तुमर्हति कृप्तांशं गुरुशुश्रूषणे रता।

न कुर्य्याद्यदि शुश्रूषाञ्चैलपिण्डे नियोजयेत् ॥

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका।

व्यभिचाररता या च स्त्रीधनन्न च सार्हति ॥

नार्हतीत्यनेन नदेयञ्जीवनपर्य्याप्तमपि। दत्तमपि तादृश्याः सकाशादपहरणीयमिति द्वयमप्युक्तम्भवति। यत्तु 'तस्मात् स्त्रियोऽनिन्द्रिया अदाया' इति श्रुतिवचनन्तन्मूलकञ्च "अनिन्द्रिया ह्यदायादाः स्त्रियो नित्यमिति स्थिति"रिति मनुवचनन्तद्द्वयमपि यासां शृङ्गग्राहिकया धनग्रहणं नोक्तन्तद्विषयमवसेयम्। गौतममिताक्षरायां हरदत्तोऽप्येवमेवाह। केचित्तु निरिन्द्रियपदसमभिव्याहारान्निन्दामात्रपरन्तदित्याहुस्तन्न। दायादत्वांशे निन्दया निषेधकल्पनावश्यम्भावात्। रागाद्दायग्रहणप्राप्ते र्नित्यानुवादसम्भवात्। अनिन्द्रियत्वन्तु पुम्पारतन्त्र्यात्कथञ्चिदनुवादः। वस्तुस्वभावविपरीतनिषेधकल्पनस्य बाधात् तस्मात्पूर्वोक्त एव समाधिः। पराशरस्मृतिटीकायां विद्यारण्यचरणास्तु श्रुतिमेवैनामन्यया व्याचख्युः। पत्नीव-

तद्ग्रहे अंशो नास्तीत्यदायादपदस्यार्थः। तत्र हेतुरनिन्द्रिया इति इन्द्रियं वै सोमपीथ इति सोमेऽपीन्द्रियशब्दप्रयोगात्ततो निर्गता इति सोमपानानधिकृता इति पत्नीवतग्रहप्रशंसेति॥ इति पत्न्यधिकारविचारः॥

पत्न्यभावे दुहितरोऽपुत्रविभक्तासंसृष्टिधनभाजः।
तथा च मनुः। यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्।
बृहस्पतिरपि। अङ्गादङ्गात्सम्भवति पुत्रवद् दुहिता नृणाम्।
तस्मात् पितृधनन्त्वन्यः कथं गृह्णीत मानव इति।

अत्र पुत्रेण समा पुत्रवदिति च साक्षाज्जन्यत्वेऽपि पुत्रे पितृत्रयवानां बाहुल्येन संक्रान्तेर्दुहितरि च पत्नीनां*
"पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः" इत्यादिवचनैः स्मृतिष्वायुर्वेदे च प्रतिपादनात्पुत्रतुल्यत्वं दुहितुरुक्तमिति द्रष्टव्यम्। आत्मनि 'आत्मा वै जायते पुत्र' इत्यात्मभूतपुत्रतुल्यायामित्यर्थः। तिष्ठन्त्यामित्यनादरे सप्तमी तामनादृत्येत्यर्थः।

यद्यप्यनेनौरसपुत्राभावे दुहितुर्धनग्रहणमित्यत्र न्याय उक्तस्तथापि गौणपुत्रपत्न्योरभावे दुहितुर्धनग्रहणमिति को न्यायः। उच्यते। नारदेन मन्दानुग्रहाय सोऽपि स्पष्टीकृतः। यदाह। पुत्राभावे तु दुहिता तुल्य सन्तानदर्शनादिति। विवृतश्चैतदन्तेनैव।

पुत्रश्च दुहिता चोभौ पितृसन्तानकारकाविति।

अयमाशयः। पुत्रदुहितरावुभौ पितुः पौत्रदौहित्राख्यसन्तानकारकावतः सन्तानप्रवर्त्तकत्वस्य तुल्यत्वाद् दुहितुरपि पुत्रवदधिकारः। पौत्रदौहित्राख्यसन्तानयोश्च स्वरूपत-

* चात्पनां—पा० १। २ पुस्तकयोः।

स्तुल्यत्वाभावात्कार्य्यतस्तुल्यत्वमभिप्रेतम्। कार्य्यमपि नर्णापाकरणरिक्थग्रहणलक्षणा "ऋणं पौत्रैर्न्न देयम्," पितामहद्रव्यमधिकृत्य च "तत्र स्यात्सदृशं स्वाम्यम्पितुः पुत्रस्य चोभयो"रिति वचनाभ्यां पौत्रे सति दौहित्रस्य तदनधिकारात्। तेनादृष्टमत्रकार्य्यं श्राद्धकर्त्तृत्वम्।

"पूर्वेषान्तु स्वधाकारे पौत्रा दौहित्रका मता" इति विष्णूक्तेः। एवञ्च दृष्टादृष्टोपकारकस्वसन्तानसुखेनोपकारकपुत्रात्केवलाद् दृष्टोपकारकस्य सन्तानसुखेनोपकारिका दुहिता न्यूना। न चैवमप्यत्यपेक्षया प्रत्यासन्ना जन्या दुहितेति पत्नीतः पूर्वं सैव धनमर्हतीति वाच्यम्। यतः सहाधिकारेणाग्निहोत्रादिवैदिककर्म्मोपकारिका कामाख्यपुरुषार्थसाधनतया सन्तानसाधनतया च दृष्टादृष्टोपकारकर्त्री देहार्धसंस्तुता पत्न्येव ततोऽधिका ततश्च पुत्राभाव इति पत्न्यभावस्याप्युपलक्षकं प्राग्लिखितविष्णुवचनादस्माच्च योगीश्वरवचनात्। यद्यपि पुत्रकर्त्तृकश्राद्धे सम्प्रदानतया स्वयमेवादृष्टोपकारकः पिता दुहित्रपेक्षया प्रत्यासन्न इति पिता हरेदपुत्रस्य रिक्थमिति वचनस्यावसर उचितो दुहितुः प्राक् तथापि तस्यात्मनि तिष्ठन्त्यामित्यनेन शरीरप्रत्यासत्त्या सैवाग्रेसरीति तदभावेतद्वचनस्यावसरः। वाशब्दोपादानेन तस्य क्रमपरत्वाभावात्। जीमूतवाहनस्तु दुहितुरधिकारे सन्तानकारत्वस्य हेतोर्न्निर्द्देशात्सन्तानस्य च पिण्डदस्यैवोपकारकत्वादपिण्डदस्यानुपकारकत्वेनान्यसन्तानाच्चाविशेषात् पुत्रवती सम्भावितपुत्रा वा दुहिता धनाधिकारणी। विधवात्ववन्ध्यात्वदुहितृप्रसूत्वादिना विपर्य्यस्तपुत्रा पुनर्न्नाधिकारिण्येवेति दीक्षितमतमादरणीयमित्याह*। तदपि चिन्त्यम्। प्राथमिकक-

* धिकारीणीत्यादृत्यं दीक्षितमतमित्याह—पा० १ पुस्तके।

न्याधिकारस्य "अपुत्रस्तस्य कुमारी ऋक्थं गृह्णीयात्तद-भावे चोढेति" पराशरवचनात् "कन्याभ्यश्च पितृद्रव्य"मित्यादि देवलवचनाच्च तेनैव प्रथमं कन्यैवैका पितृधनाधिकारिणीत्यनेन ग्रन्थेनाभिधानात् । तदानीं च पुंसम्भावनानिश्चयाभावात् । हेतुनिर्देशस्य प्रत्यासत्त्यतिशयमात्रप्रदर्शकतयाप्युपपत्तेः । किञ्च स्वयमेव कन्याया असम्भवे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकार इति वदन् हेतोर्व्यभिचारितां दर्शयति । तस्मान्मदुक्तरीत्यैव प्रत्यासत्त्यर्थतया हेतुर्व्याख्येयः । धारेश्वरदेवस्वामिदेवरातप्रभृतयस्तु पिता हरेदपुत्रस्येत्यादिवचनविरोधपरिहाराय दुहित्रधिकारप्रतिपादकवचसां पुत्रिकाविषयत्वं तदभावे तु पित्रादय एव यथोक्तक्रमेणाधिकारिण इत्याहुस्तदतिपेशलम् । पुत्रिकाया "औरसो धर्मपत्नीजस्तत्समः पुत्रिका सुतः तृतीयः पुत्रिकापुत्रः विज्ञायत" इति योगीश्वरवशिष्ठादिवचनैर्गौणपुत्रकोटिनिविष्टायाः क्षेत्रजादिपुत्रवत् "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितु"रिति गौणपुत्रविषयेण मानवेन वचनेन पत्न्यां सत्यामपि रिक्थग्राहित्वात्तदभावे रिक्थग्राहित्वं दण्डापूपिकयैव सिद्धमिति वचनारम्भानर्थक्यापत्तेः । दुहितृमात्रवाचकानां बहूनां वचनानां विना कारणं विशेषपरत्वकल्पनानुपपत्तेश्च । किञ्च भवन्मते अङ्गादङ्गात्सम्भवतीत्यादिना पुत्रिकाविषयेण वचसा पुत्रिकाया धनग्रहणे उक्ते पुनः

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताऽकृता वा पुत्रस्य पितुर्धनहरी तु सा ॥

इत्यनेन पुनर्धनहरत्वप्रतिपादनन्तेनैव मुनिना क्रियमाणं विवरणमात्रतयाऽपुनरुक्तङ्कर्त्तव्यं स्यात् । सामान्यविशेष-

विषयतया तु स्पष्टमेवापौनरुक्त्यम्। सदृशी पितृसवर्णा। सदृशेन सवर्णेनोढेति प्रकृष्टापकृष्टवर्णसम्बन्धनिरासाय। तज्जातस्योत्तमवर्णमातामहश्राद्धादिनिषेधादिति जीमूतवाहनोक्तमनादेयम्। ऊढापदेनैवाधमवर्णसम्बन्धनिरासात्। नह्यधमवर्णोढत्वमुत्तमवर्णाया: सम्भवति। तस्मादुत्तमवर्णनिरासार्थमेव सदृशग्रहणम्। ननु नारदेन कन्यारूपाणां पितृभ्रातृरहितानां सर्वासामेव दुहितॄणां पितृधनाप्राप्तिरुत्सर्गतोऽभिहिता। यथाह।

स्यात्तु चेद् दुहिता तस्या: पित्र्योंऽशोऽभरणे मत:।
असंस्कारादृरेद्भागम्परतो बिभृयात्पतिरिति॥

तस्या इति पतिपुत्रविहीनपत्नीमधिकृत्याह।

तेन तादृश्यां यदि दुहिता विद्यते तस्याभरणनिमित्तमात्रपित्र्योंऽशस्तस्माद् विवाहसंस्काराद्भरणार्थमेव सा पितृधनभागं हरेत्परतो विवाहादूर्ध्वं पतिस्तां बिभृयात्। तेन तावत्कालभरणावशिष्टमपि ततो गृह्णीयात्। यथेष्टविनियोगार्थन्तु कन्याया: पितृधनग्रहणं दूरापास्तमेव। ततश्चास्यापवादकानि दुहितु: पितृधनप्राप्तिप्रतिपादकानि वचनानि सर्वाणि पुत्रिकाविषयाण्येव वाच्यानि। अन्यथा द्वयोरपि दुहितृसामान्यविषयतयोत्सर्गापवादत्वानुपपत्ते:। तस्माद्धारेश्वरादिमतमनुमन्तव्यमिति चेन्न। स्यादेवं यदि नारदवचनं विभक्तविषयं स्यात्। पौर्वापर्य्यालोचनया संसृष्टाविभक्तविषयन्तत् स्फुटमवगम्यते। ततश्च विभक्तविषये दुहितृमात्रस्य पत्न्यभावे पितृधने ग्रहणप्रतिपादकानि प्रापकाण्येव नापवादकानीति पुत्रिकामात्रविषयत्वे तेषां किमपि बीजम्पश्याम:। यत्तु सकलपितृधनग्रहणाधिकारप्रतिपादकतया कन्याभ्य इत्यादि दे-

वलवचनं जीमूतवाहनेनोपन्यस्तं तत्पूर्वापरविरुद्धम् । जीवद्विभागे कन्यायाः विवाहमात्रोपयुक्तधने तस्य प्रमाणतयोपन्यासात् तदपि चास्माभिः प्राङ्निरस्तम् । दुहितृष्वपि प्रथमम्प्रत्ता: पितृधनं गृह्णीयुस्तदभावे प्रत्ता तासामपि मध्ये प्रागभावप्रतिष्ठितास्तदभावे प्रतिष्ठिता सर्वा समानरूपास्तु समं विभज्य गृह्णीयुरित्यर्थः सिद्धम् । तथा च कात्यायनः ।

पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी ।

तदभावे तु दुहिता यद्यनूढा भवेत् तदेति ॥

गौतमः "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च"ति । अप्रतिष्ठिता निर्धनाः । यद्यपि स्त्रीधनमित्युक्तं तथापि तुल्यन्यायतया पितृधनविषयमप्येतत् । वन्ध्यत्वादिना सन्तानरहिता प्रतिष्ठितेति तु न युक्तम् । तस्याः सन्तानमुखेनादृष्टोपकाराभावेन धनहारित्वायोगात् । सदृशी सदृशेनोढेति प्राक् पठितं बृहस्पतिवचनं स्मृतिचन्द्रिकाकार इत्थं व्याचख्यौ । अत्राद्यानि चत्वारि विशेषणानि पत्न्या । ऊर्ध्वमर्थग्राहीणि दुहितृविषयाणि । प्राग्धनग्राहिणी दुहितृविशेषणे द्वे अवशिष्टे । कृताऽकृता वेत्यत्र पुत्रिकेति विशेष्याध्याहारः । इतरत्र दुहितेतिविशेष्याध्याहारः वाशब्दश्चव्यवस्थितविकल्पार्थः । एवञ्चायमर्थः । औरसपुत्रविहीनस्य पितुर्धनं द्विविधापि पुत्रिका पत्न्याः पूर्वं गृह्णीयात् । सवर्णादिविशेषणोपेता तु दुहिता तत ऊर्ध्वमिति । एवञ्च पत्न्या ऊर्ध्वं सवर्णादिविशेषणोपेतप्रतिष्ठिताऽप्रष्ठितोढानूढानां दुहितॄणां समवाये प्रागनूढैव गृह्णाति पित्रा भर्त्तव्यत्वात् । तदभावे ऊढाऽप्रतिष्ठिता । भर्त्रा भर्त्तव्यत्वेऽपि भर्तुर्भरणासामर्थ्येनाप्रतिष्ठितत्वात् । तदभावे प्रागुक्त प्रत्यासत्त्या सवर्णादिविशेषणोपेतापि धनं गृह्णाति ।

अन्यैस्तु कृतेति पुत्रिका परमकृतेति दुहितृमात्रपरमभ्युपेत्य वाशब्दस्य नास्थापरमास्थायाखिलं दुहितृमात्रविषयं विशेष्या-ध्याहारमन्तरेणैव व्याख्यातम्। सेत्यनेन दुहितृमात्रपरामर्शा-त्। दुहितर इति बहुवचनं सजातीयानां समांशोऽसमान-जातीयानां वर्णक्रमेण विशेषांश इति प्रतिपादनाय॥

इति दुहितुरधिकारः॥

दुहितुरभावे दौहित्रः

चशब्दादनुक्तसमुच्चयार्थात्। तथा च विष्णुः।

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः॥

पूर्वेषान्तु स्वधाकारे पौत्रदौहित्रकाः समाः॥

अपुत्रपौत्रेति दुहितृपर्य्यन्ताभावोपलक्षणम्। मनुरपि।

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।

पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति॥

पौत्रीत्यनेन यथा पुत्राभावे पौत्रः पितामहधनाधिकारी तथा दुहित्रभावे दौहित्र इत्युक्तम्। बृहस्पतिरपि।

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु।

तथैव तत्सुतोऽपीष्टे मातृमातामहे धने॥

यथा येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारि-णी तथैव तेनैव पिण्डदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि बन्धुषु पित्रादिष्वित्यर्थः। न च पुत्रिकापु-त्रविषयमिदं वचनम्। तस्या इति तत्सुत इति च सर्वनाम-भ्यामकृतदुहितृमात्रपरामर्शात्। अतएव मनुरपि दौहित्रमा-त्रस्यैव मातामहधनाधिकारं दर्शयति।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।

स एव दद्याद् द्वौ पिण्डौ पित्रे मातामहाय च॥

पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः।

तयोर्हि मातापितरौ सम्भूतौ तस्य देहत इति॥

पितुरिति मातुः पितुरिति व्याख्येयम्। अतएवाग्रे मातामहाय चेत्याह। अथवा यथा स स्वपितुरखिलं रिक्थं गृह्णाति तथाऽपुत्त्रस्य मातामहस्यापि। स्वयमेव तत्पुत्त्रकार्यकारित्वात्। तदेवाह, स एवेति। स्वपित्रे मातामहाय चेत्यर्थः। मातापितराविति च न यथाक्रममन्वयः किन्तु पौत्त्रस्य पिता दौहित्त्रस्य माता धनस्वामिनो देहतः सम्भूताविति यथायोग्यम्। केचिदपुत्त्रपौत्त्रेति यथाश्रुतविष्णुवचनात्पत्नीदुहितृतः प्राग्दौहित्त्रस्य धनाधिकारमाहुस्तद्योगीश्वरविरोधात्तथैव तत्सुतोऽपीति बृहस्पतिवचनेऽपि दुहितृतस्तस्य जघन्यभावावगतेर्हेयम्। इति दौहित्त्राधिकारः।

दौहित्त्राभावे पितरौ धनभाजौ।

अत्र मिताक्षरा। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात्तदपवादत्वाच्चैकशेषस्य मातापित्रोर्धनग्रहणे क्रमो न प्रतीयते तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविलत्र मातृशब्दस्य पूर्वश्रवणात्पाठक्रमादेवार्थक्रमोगम्यमानः क्रमाकाङ्क्षायां सत्यां न परित्यक्तुमर्ह इति प्रथमं माताऽपुत्त्रपुत्त्रधनभाक् तदभावे पिता। किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता त्वस्यैवासाधारणीति प्रत्यासत्त्यतिशयादनन्तरः सपिण्डाद्यस्तस्य तस्य धनस्भवेदिति मनुना प्रत्यासत्त्यतिशयेन धनग्रहणाधिकारस्य विनिगमितत्वात्सपिण्डसमानोदकादिष्विव विनिगमनाकाङ्क्षायामेतद्वचनप्रवृत्तेरप्यदण्डवारितत्वादिति। अत्र स्मृतिचन्द्रिकाकारः प्रगल्भते। सारस्वती भवत इत्यत्रोत्पत्तिवाक्येक्रमावगत्यभावेन याज्यक्रमेण प्रधानानुष्ठानक्रमः पञ्चमे निरूपितो न त्वेकशेषत एव काचित्क्रमात् गतिरुपपादि-

ता तद्वद्वापि क्रमार्थमन्यत्प्रमाणमन्वेषणीयन्तदभाव इतरेतरयोगस्य द्वन्द्ववदेकशेषेऽप्यवगते* र्विभज्यैव पित्रोस्तुल्यतया धनग्रहणं युक्तम्। यत्तु, पिता सपत्नीपुत्रेष्वपि साधारणो माता त्वसाधारणेति प्रत्यासत्त्यतिशयात्तस्या एव पितृतः प्राग्धनग्रहणान्याय्यमित्युक्तन्तदप्यन्याय्यम्। नहि जननीजनकयोर्जन्यं प्रति प्रत्यासत्तितारतम्यमस्ति। पुत्रान्तरजनकस्यापि तज्जनकताया मातृतुल्यत्वात्। नहि जनकतापि व्यासज्यवर्त्तिनी। न च पितृगृहीतन्धनं भिन्नोदरेष्वपि सङ्क्रामति। मातृगृहीतन्तु तत्सहोदरेष्वेवेति मातुरेव धनग्रहणमिति वाच्यम्। तस्याः प्रत्यासत्तेर्भ्रातृगिनीधनाधिकारविनिगमकतया जनकाज्जनन्या धनग्रहणविनिगमकत्वासम्भवात्। द्वन्द्वस्थानीयैकशेषात्तुल्यतावगतौ प्रत्यासत्तेरप्रयोजकत्वाच्च। सत्यां हि क्रमाकाङ्क्षायां सा क्रमनियामिका नत्वसत्यामपि। तस्मात्पित्रोस्तुल्यस्वाम्याद्विभज्यैवानपत्यविधुरपुत्रधनग्रहणमिति श्रीकरस्तदयुक्तम्। पिताहरेदपुत्रस्य रिक्थं स्वर्य्यातस्य ह्यपुत्रस्य माता दायमवाप्नुयादित्यादिवचनेषु पितुर्मातुश्च निरपेक्षस्वाम्यप्रतीतेर्युगपद्ग्रहणायोगात्। व्रीहियवयोर्निरपेक्षसाधनत्वप्रतीतौ मिश्रत्वायोगवत्। केचित्तु, मातुर्गर्भधारणपोषणादिनात्यन्तोपकारित्वा"त्सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते"इत्यादिस्मरणाच्च प्रथमं मातुर्धनाधिकारमाहुस्तदपि तुच्छम्। पितुरपि संस्कारवृत्तिसम्पादनादिना बहुधा संविधातृत्वा"त्तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनादि"त्यादिस्मरणेन सत्प्रतिपक्षत्वाच्च गौरवमात्रस्य धनग्रहणप्रयोजकत्वे "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिते"त्यादि स्मरणाच्च पितृतोऽपि पूर्वमाचार्य्यस्याधिकारापत्तेर्भ्रातृभ्रातृपुत्रयोश्च सतोः पितामहपितृव्यादीनामेव प्रागधिकारापत्तेः।

* एकशेषावगतेरिति—पा० १ पुस्तके।

जीमूतवाहनस्तु पितराविव्यस्मात्पितृक्रम एव वागस्यते ।

तथाहि पितृप्रातिपदिकात्प्रथमम्पितुरवगतो द्विवचनाच्च तेनैकशेषकल्पनायां सरूपैकशेषासम्भवे विष्णुमन्वादिवचनसम्वादाच्च विरूपैकशेषत्वनिश्चये मातुरवगमात्। अतः क्रमज्ञानं क्रमाभिधानव्याप्तं क्रमाभिधाने व्यापकेति वर्त्तमाने निवर्त्तत इति श्रीकरोक्तिर्विपरीतक्रमोक्तिश्च विज्ञानेश्वरीया न युक्तेत्याह। तस्मान्नैयायिकक्रमस्याव्यवस्थितत्वाद् बृहद्विष्णुवचनोक्तः क्रम आदरणीयः। तत्र च दुहितृगामीत्युक्त्वा तदभावे पितृगामी तदभावे मातृगामीत्युक्तम्। मिताक्षराकारस्य तु प्रथमत एव तादृशपाठेनैव बृहद्विष्णुवचनं लिखतस्तद्विरुद्धन्यायमात्रावलम्बनेन पितराविव्यत्र पितृतः प्राङ्मातुः पुत्रधनाधिकारं सिद्धान्तयतो महत्येव हृदयशून्यता प्रतिभाति। दौहित्रस्यापि दुहितृकोटिनिविष्टत्वाद् बृहद्विष्णुना पृथगनभिधानत्तेन दौहित्राभावोऽपि दुहित्रभावेनोपलक्ष्यतइति मन्तव्यम्। तस्मात् स्मृतिचन्द्रिकामदनरत्नकारकल्पतरुरत्नाकरपारिजातकारप्रभृतीनाम्बहूनाम्पितुरभावे मातुः पुत्रधनाधिकार इत्येव सिद्धान्तः। वाचस्पतिना तु तदभावे मातृगामि तदभावे पितृगामीति बृहद्विष्णुवचनं पठित्वा यथा मिताक्षरमेव सिद्धान्तितं तत्तु कुत्रापि तदतिरिक्तग्रन्थे तथा पाठस्यालिखनाद् भ्रान्तिविलसितमेव। विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादित्यपि मिताक्षराग्रन्थो दुष्टः विग्रहवाक्ये पूर्वनिपातनियमाभावात् समासे हि तन्नियमः शाब्दिकैः स्मर्यते न तु विग्रहवाक्यइत्यादिविज्ञानेश्वरोक्तन्याये यद्दूषणमन्यैरुक्तं तत्परिहाराय पराक्रम्यते। युगपदधिकरणवचनता तावत् द्वन्द्वस्य वचनाधिकरणे वार्त्तिके तन्त्ररत्ने च महता प्रबन्धेन निर-

त्ता। इतरेतरयोगोऽपि पदान्तरान्वये द्वन्द्वाच्छाब्दरीत्या प्रतीयते तेन पितरौ धनभाजावित्यनेन, युगपदन्वयोऽपि वस्तुगत्या तयोः क्रमेऽपि न वाक्यदोषः। सर्वैश्च श्रीकरमिश्रैस्तदभ्युपगमात्सर्वसमाधेयमिदम्। एकशेषभावपक्षे च मातापितरौ मातरपितरावित्यत्र मातृशब्दस्यपूर्वश्रवणात्समासैकशेषयोश्च तुल्यप्रतीतिजनकत्वाभावे विकल्पायोगादत्रापि तथा प्रतीतिरभ्युपेया विग्रहवाक्ये यद्यपि पूर्वनिपातनियमो नानुशासनसिद्धस्तथापि व्याख्यातृसम्प्रदायसिद्धोऽस्त्येव। न हि क्वापि पिता च माता च पितराविति विग्रहन् दृश्यते किन्तु माता च पिता च पितरावित्येवेत्यणुरपि विशेषोऽध्यवसायकर इति न्यायेन तस्यापि विनिगमकता सम्भवतीत्यनेनाशयेन तथोक्तिः सम्भवः। पितुः पुत्रान्तरसाधारण्यं मातुस्त्वसाधारण्यमिति प्रत्यासत्तिरपि जनकताया अव्यासज्यवृत्तित्वेऽपि तदभिप्रायेणैवोक्ता। साधारण्यासाधारण्ये हि सम्बन्धकृते व्यपदेशप्रतीतिविलम्बाविलम्बने भवत एव तथानुभवात्। वाक्यार्थबोधे क्रमाभावे किमिति वस्तुक्रम आश्रीयतइति श्रीकरोक्तिस्तु वचनान्तरे निरपेक्षत्वास्यावगत्या क्रमापेक्षया स्मृतिचन्द्रिकाकारादिभिरप्यवश्यं निरस्यैव। बृहद्विष्णुवचनविरोधः परं दुरुत्तरोऽवशिष्यते तत्रापि यथाशक्ति प्रतिविधीयते। गौरवप्रतिपादकानि वचनानि तावन्मातापितृविषयाणि विरुद्धानि दृश्यन्ते। तानि विषयव्यवस्थयावश्यमविरोधन्नेयानि। तथाहि।

उपाध्यायादृशाचार्य आचार्याणां शतम्पिता।
सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते॥

गर्भधारणपोषाभ्यान्तेन माता गरीयसीत्यादीनि मातु-

रभ्यर्हितत्वप्रतिपादकानि, तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनादित्यादिस्मृतिवचनानि पित्राज्ञया परशुरामेण मातुः शिरश्छिन्नम् रघुनाथेन कौशल्यया निवारितेनापि पित्राज्ञया राज्यं विहाय वनवास आहृत इत्यादि पौराणिकान्यर्थदर्शनानि च पितृपूज्यता प्रत्यायकानि। तेषाञ्चायमविरोधप्रकारो यः पिता महागुरुलक्षणोपेतः "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छती"त्यादि योगीश्वरादिवचोभिः प्रतिपादितो माता च तदाज्ञावशवर्त्तित्वादिपतिव्रतात्वप्रयोजकसमस्तलक्षणारहिता। तयोर्मध्ये मातुरपेक्षया पितैवाधिकाभ्यर्हितः। यत्र तु माताऽरुन्धत्यादिवत्समस्तपतिव्रतागुणोपेता पिता तु जन्ममात्रप्रदः स तत्र मातैव पितुरपेक्षयाभ्यधिकमान्या। चिरकारिकोपाख्यानादौ महाभारतादप्येवमुपाख्यानस्वरसादयमर्थं उत्तीर्य्यते तदत्रापि मन्वादिवचनेष्वपुत्रपुत्त्रधनग्रहणाधिकारः क्वचित् मातुः प्रथमं क्वचित्पितुः प्रतीयमान एवमेव व्यवस्थापयितुमर्हः। तथाहि।

अनपत्यस्य पुत्त्रस्य माता दायमवाप्नुयात् ।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति मनुः ॥
भार्य्यासुतविहीनस्य तनयस्य मृतस्य च ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति बृहस्पतिः ॥
पुनर्मनुरेव। पिता हरेदपुत्त्रस्य रिक्थं भ्रातर एव चेति ॥

तदभावे पिता तदभावे मातेति प्राग् दर्शितबृहद्विष्णुवचनानि। योगीश्वरवचने तु पितरावित्यत्र विज्ञानेश्वरोक्तरीत्या प्राङ्माता तदनु पिता। अन्यमते सम्भूय पितृभागः पितुर्वा प्राथम्यमिति विप्रतिपत्तौ पितुरधिकमान्या या माता सा पितुरपेक्षया प्रथमाधिकारिणी। या तु पितुरपेक्षया न्यूनमा-

नभाक् सा पितुः पश्चात्। युक्तञ्चैतत्। वृत्त्यादिसंविधानमकुर्वतः पितुरपेक्षया मातुरेवाधिकोपकारकत्वाद्धनग्रहणम्। वृत्त्यादिसंविधानकर्त्तुस्तु तस्य यावज्जीवम्भरणपोषणादिनातिशयितोपकारस्य धनग्रहणमिति सर्वस्मृतीनां सर्वनिबन्धानाञ्चादुष्टता भवतीत्यादि सुधीभिर्विभाव्यम्॥ इति पित्रधिकारः।

पित्रोरभावे भ्रातरो धनभाजः। यद्यप्यपुत्त्रधनं भ्रातृगामि अपुत्त्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यन्तदभावे पितराविति शङ्खपैठीनसीयवचनयोः भ्रातर एवेति मनुवचने च पितृतः प्राक् भ्रातृणान्धनग्रहणं प्रतीयते। “मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धन”मिति च मनुवचने भ्रातृतः प्राक् पितामह्यास्तथापि क्रमपरयोगीश्वरवृहद्विष्णुवचनाविरोधाय तेषान्धनाधिकारमात्रपरत्व, मेतत्क्रमाविरोधसूचनार्थमेव मनुना भ्रातर एवेति पैठीनसिनापि ज्येष्ठा वा पत्नीति वा शब्दः प्रयुक्तोऽन्यथा तुल्यकक्ष्याधिकारिषु तत्प्रयोगोऽत्यन्तमयुक्तः स्यादिति मिताक्षराकारादयो बहवः। कल्पतरुकारस्तु पत्नी भ्रातृस्थले श्राद्धाद्यधिकारिणी साध्वी पत्नी प्रथमाधिकारिणी तदन्या तु भ्रातृपितृतोऽनन्तरम्। पितृभ्रातृस्थले तु पितृपितामहाद्युपार्जितं यद्विभागेन पुत्त्रे संक्रान्तधनन्तस्मिन्नपुत्त्रे प्रमीते पित्रोः पितृद्रव्याविरोधेन यत्तेनोपार्ज्जितन्तत्पित्रोः सतोरपि भ्रातृणामेवेत्याह। मम तु प्रतिभाति मातर्य्यपि च वृत्तायामिति मनुवाक्ये तदभावे मातापितराविति शङ्खपैठीनसिवचनयोः।

ततो दायमपुत्त्रस्य विभजेरन् सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्य्या चेति यथा क्रमम्॥

तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः ॥

इति देवलवचने सर्वत्रापि वृत्तायान्तदभावे यथा क्रममित्यादिपदैः क्रमप्रतीतेर्योगीश्वरवृहद्विष्णुवचनयोरेव क्रमपरत्वमितरेषान्त्वधिकारमात्रपरत्वेन तदविरोधेन तत्तत्स्थाननिवेशोऽप्यन्ततिरिति समाधिर्नैव साधुः किन्तु चेत्रजादिपुत्त्रस्थले यथा स्मृतिवचनक्रमविपर्यासे औरसानुकूल्यगुणवत्त्वागुणवत्त्वादिभिर्व्यवस्थापितस्तथात्रापि दायभागप्रकरणे पुत्त्रादीनाम्पित्राद्युपकारकत्वकीर्त्तनस्य गुणवत्त्वादिकीर्त्तनस्य वा मन्दप्रयोजनत्वात्प्रत्यासत्तितारतम्यवत् धनस्वाम्युपकारातिशयानतिशयगुणवत्त्वागुणवत्त्वादिभिर्यथावचनं स सर्वोऽपि क्रमविपर्यासः समाधेयोऽन्ये तु समाधयः कुशकाशावलम्बनमात्रतुल्या अनुपादेया इति । एव मग्रेऽपीति सर्वं सुस्थम् । भ्रातृष्वपि प्रथमं सहोदराः ।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति मनुना

बहवोज्ञातयो यस्य सकुल्या बान्धवाऽस्तथा

यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेदिति बृहस्पतिना च ।

प्रत्यासत्त्यतिशयस्यैवासति विशेषवचने विनिगमकत्वेनोक्तेः भिन्नोदराणां मातृकृतविप्रकर्षात् । भ्रातर इति सामान्यग्रहणात्सोदराभावे भिन्नोदराः । इदमेव व्यक्तमुक्तं संग्रहकारेण ॥

सोदर्याः सन्त्यसोदर्य्या भ्रातरो द्विविधा यदि ।

विद्यमानेऽप्यसोदर्य्ये सोदर्य्या धनभागिन इति ॥

इति भ्रात्रधिकारः ॥

भ्रात्रभावे तत्सुताः भ्रातृसुता धनभाजः ॥

न च तथा तत्सुता इति तथाशब्देन भ्रातृपुत्त्रयोः सादृश्यप्रतिपादनाद् अनेकपितृकाणान्तु पितृतो भागकल्पनेति वचनाच्चानयोः पित्रभावे विभज्य धनग्रहणमस्त्विति वाच्यं, विष्णुवचनाविरोधेन तथाशब्दस्य चशब्दार्थत्वात्। अन्यथा तथापदस्य पूर्वेणान्वयसम्भवेन पितृभ्रातृणाञ्च विभज्य ग्रहणमित्यपि कुतो न स्यात्। तत्रेद्विष्णुवचनविरोधान्नेत्युच्यते सोऽत्रापि तुल्यः। अनेकपितृकाणामितिवचने भ्रात्रभावे तेषामधिकारे सम्पन्ने कस्मिंश्चिदप्यपुत्त्रे भ्रातरि प्रमीते विद्यमानानां भ्रातृणां सर्वेषां तद्धनसम्बन्धे जाते तद्विभागात् प्रागेव तन्मध्येऽपि यदि कश्चिन्मृतस्तदा तत्पुत्त्राणाम्पितृव्यैः सह समविभागे प्रसक्ते स्वपितृविभागमेव ते विभज्य गृह्णीयुर्न सर्वे पितृव्यसमामित्येतदर्थम्, भ्रातृसत्त्वे तत्पुत्त्राणाम्पितृव्यधनेऽनधिकारात्। पूर्वाभावे परः पर इति योगीश्वरवचनात्तदभावे भ्रातृपुत्त्रगामीति विष्णुवचने भ्रातृपरामर्शकतत्पदेन भ्रात्रभावाभिधानाच्च। भ्रातृपुत्त्रेष्वपि प्रत्यासत्त्यतिशयात्पूर्वं सोदरभ्रातृजास्तदभावे भिन्नोदरजाः। युक्तञ्चैतत्। असोदरभ्रातृपुत्त्रो हि धनिनो मातरं विहाय स्वपितामही विशिष्टस्य धनिपितुः पिण्डन्ददातीति सोदरभ्रातृपुत्त्राज्जघन्यस्तदनन्तरमेवाधिकारीति। न च सपत्नीकत्वे त्रयाणां श्राद्धदेवतात्वात्सपत्नमात्रादीनामप्यस्ति तत्रानुप्रवेश इति वाच्यम्। मात्रादिशब्दानां स्वजननीपितृजननीपितामहजननीष्वेव मुख्यत्वात्तेनैव च रूपेण श्राद्धानुप्रवेशस्मरणात्। यथा स्मरन्ति ॥

स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधाकरम् ॥
पितामही च स्वेनैव तथैव* प्रपितामहीति ॥



* स्वेनैव—पा० १ पुस्तके ॥

सपत्नमात्रादीनामनुप्रवेशः प्रत्युक्तः ।

अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा ।

तेषामपि च देयं स्यादेकोद्दिष्टन्न पार्वणमि"ति स्मरणाद्‌-याति । किञ्च सपत्नीकदेवताकश्राद्धविधेः पुत्रादिसर्वजनाधि-कारिकत्वात्सपत्नमात्रादीनाञ्च नित्यसंयोगाविरोधान्मात्रादि-सापिण्ड्यमेव सपत्नीकरणविधायकत्वं युक्तम् ॥ इति भ्रातृपुत्रा-धिकारः ॥

भ्रातृपुत्राभावे गोत्रजाः पूर्वोक्तपितृभ्रातृतत्सुतभिन्ना गृह्णन्ति गोबलीवर्द्दन्यायात् ते च पितामही सपिण्डाः समानोदकाश्च । तत्र प्रथमम्पितामहीधनभाक् । "मातर्य्यपि च वृत्तायां पितु-र्म्माताहरेद्धन"मितिमानवान्मातृनन्तरम्पितामह्या धनग्रहणे प्रसक्ते पितादीनां भ्रातृसुतपर्यन्तानाम्बहुक्रमायामन्तस्तदनुप्रवे शासम्भवादुत्कर्षेऽप्यग्रे तदुत्कालनकारणाभावात्तदनन्तरम्पितामहादयोऽन्ये गोत्रजा इति विज्ञानेश्वरः । अत्र स्मृतिचन्द्रिकाया-ङ्गोत्रजा इत्यत्र सरूपैकशेषेण पुमांस एव गोत्रजा न तु स्त्रीरूपाः । विरूपैकशेषो हि कुक्कुटावानय मिथुनङ्करिष्याम इत्यादि वाक्य-शेषादिसमभिव्याहारादिप्रमाणान्तरावगततात्पर्य्यग्रहनिबन्धनो न चात्र प्रमाणमस्ति । प्रत्युत भ्रातृसुतादिसाहचर्य्यपुङ्गोत्रजग्र-हणएव साधकमस्ति । किञ्च पत्नीदुहित्रादीनां गृह्णग्राहिकधन-ग्रहणाधिकारोक्तेस्तस्मात् स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेरस्तु तद्व्यतिरिक्तविषयता गोत्रजादिस्थले तद्विरोधाद्विरूपै-कशेषकल्पनैव हातुमर्हा । अतएव 'जीवन्पुत्रेभ्यः पिता दायं* विजेदि"त्यापस्तम्बसूत्रं व्याचक्षाणेन तद्भाष्यकारेण पुत्रेभ्य एव दायं विभजेत न स्त्रीभ्यो दुहितृभ्य इत्युक्तोक्तं, यद्यपि भ्रातृ-

* पुत्रेभ्यो दायं—पा० १ । २ पुस्तकयोः ।

पुत्रौ स्वसृदुहितृभ्यामिति पाणिनिस्मरणात्पुत्रेभ्य इत्यत्र पुत्राश्च दुहितरश्चेति विग्रहे विरूपैकशेषेण दुहितॄणामप्यत्र सूत्रेऽनुप्रवेशः शक्यते कर्तुंन्तथापि पुमांसो दायादा न स्त्रियः। तस्मात् स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेरिति । श्रुतिविरोधात्तात्पर्यग्राहकमानाभावाच्च विरूपैकशेषोऽनुशिष्टोऽप्यत्र न ग्राह्य इति भाष्यकाराभिप्रायः। जीमूतवाहनोऽपि याज्ञवल्क्येन च पित्रादिदौहित्रस्यापि तद्गोत्रजातस्य पिण्डदानानन्तर्यक्रमेणाधिकारप्रतिपत्त्यर्थं गोत्रजपदग्रहणं कृतं सपिण्डस्त्रीणाञ्च व्युदासार्थञ्च तासामेतद्गोत्रजातत्वात्*। अतएव अर्हति स्त्रीत्यनुवृत्तौ बौधायनः। न दायन्निरिन्द्रिया अदायादाश्च स्त्रियो मता इति श्रुतेरिति। नायमर्हतिं स्त्रीत्यन्वयः। पत्न्यादीनान्त्वधिकारो विशेषवचनादविरुद्ध इति तन्न साधु। मन्वादिवचनेषु प्राग्लिखितेषु पितामह्या धनाधिकारस्य शृङ्गग्राहिकयैव विधानात्तदेकवाक्यतया योगीश्वरवचनस्यापि विरूपैकशेषेण तत्संग्रहेऽपि श्रुतेस्तदन्यपरत्वेनाविरोधात्। जीमूतवाहनस्य तु मात्राधिकारविचारप्रस्तावे पितामहसन्तानात्पूर्वम्पितामहाच्च परतः पितामह्या धनाधिकारः। पितृतः परतो मात्रधिकारवत् । याज्ञवल्क्येन मात्रधिकारप्रदर्शनेनैव पितृव्यादिभ्यः पूर्वम्पितामहपितामह्योरधिकारस्य सूचितत्वात्पृथङ्गोक्त इति वदतोऽत्र च सपिण्डस्त्रीव्युदासार्थङ्गोत्रजग्रहणं वदतः पूर्वापरविरोधानुसन्धानमपि नास्ति। शृङ्गग्राहिकया योगीश्वरवचने पितामह्याः पितृव्यादिपत्नीवदनभिधानस्य तुल्यत्वात्तद्वदेवादायादश्रुतिप्रवृत्तेरविरोधात्। विद्यारण्यश्रीचरणोक्तप्राग्लिखिततस्मान्निरिन्द्रियाइत्यादिश्रुतिव्याख्याने तु

* तासामेतद्गोत्रजातत्वात्—इति नास्ति १ पुस्तके।

स्त्रीत्वाद्दायग्रहणप्रतिषेधकत्वमेवास्याः श्रुतेर्नास्तीति न वा ग्र-
ह्णा न चोत्तरम् । परन्तु बौधायनमुनिवचनविरोधि तद्व्याख्या-
नङ्कथमुपपद्यताम् । अस्तु वा इन्द्रियपदस्य वाक्यशेषात्सोम-
परता तथापि दायादत्वाभावाभिधानावलम्बनस्यान्यस्या-
सत्वान्निरालम्बनश्रुतेरसम्भवात्त्विद्ववत्कीर्त्त नानुपपत्तिप्रभूत--
प्रतिषेधकल्पनावश्यम्भावात् । तस्माद्धर्मेणाविज्ञातेन इतेन
ब्रह्महैत्यवैवेति ध्येयम् । पितामह्या अभावे पितामहादयः
सगोत्राः सपिण्डा धनभाजः । भिन्नगोत्राणां सपिण्डानां ब-
न्धुशब्देन ग्रहणात् । तत्रापि पितृसन्तानाभावे पितामही पिता-
महः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्ता-
नाभावे प्रपितामही प्रपितामहस्तद्भ्राता तत्सूनवश्चेत्येवमा-
सप्तमात्समानगोत्राणां सपिण्डानामपुत्रधनभाक्त्वम् । सपि-
ण्डाभावे समानोदकानाम् । ते च सपिण्डानामुपरि सप्त ।
जन्मनामज्ञानावधिका वा । यथाह मनुः ॥

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेताचतुर्दशात् ।
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यत इति ॥

विष्णु वचने बन्धुसकुल्यपदाभ्यां सपिण्डसगोत्रौ गृह्येते
इति प्रागेव प्रतिपादितम् । समानोदका अपि प्रत्यासत्तिक्रमे-
ण धनभाजः समानोदकाभावे बन्धवो धनभाजः । बन्धवश्च त्रिवि-
धा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्च । तथा च स्मृतिः ।

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवाः ॥ १
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ २

मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा इति ॥ ३

तत्रापि प्रत्यासन्नत्वात्प्रथममात्मबन्धवस्तदनन्तरम्पितृबन्धवस्तदनु मातृबन्धव इति क्रमः। मनु स्मृतौ तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वेत्यत्र सकुल्यशब्देन सगोत्रसमानोदकानां मातुलादीनां बन्धुत्रयस्य च ग्रहणं योगीश्वरवचनेऽपि बन्धुपदेन मातुलाद्युपलक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्येतेति तत्पुत्राणाञ्चनाधिकारस्ततः प्रत्यासन्नानान्तेषामेव स नेति महदनौचित्यमापद्येत। बन्धूनामभावे चाचार्य्यो धनभाग्यद्यपि योगीश्वरवचस्याचार्य्यो नोपात्तस्तथापि शिष्य उपात्तस्ततः प्रधानः ततः प्रत्यासन्नतमस्याचार्य्य औचित्यादुपलक्षणीयः। "आचार्य्यः शिष्य एव वे"ति मनुना "पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यस्तदभावेऽन्तेवासी"त्यापस्तम्बेन च स्पष्टमेवाचार्य्याभावे शिष्यस्याधिकारबोधनाच्च। शिष्याभावे सब्रह्मचारी सहाध्यायी धनभाक्। यस्यैकस्मादाचार्य्यादुपनयनाध्ययने स सब्रह्मचारी। सब्रह्मचारिणोऽभावे ब्राह्मणद्रव्यव्यतिरिक्तं राजा गृह्णीयात्। सहाध्यायिपर्यन्तमधिकारमुक्त्वा तदभावे ब्राह्मणधनवर्जं राजगामीति प्रागुदाहृतवशिष्ठवचनात्।

सर्वेषामप्यभावे ब्राह्मणा रिक्थभागिनः।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥
अहार्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः।
इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः ॥

इति मनुवचनाच्च ब्राह्मणद्रव्यं सब्रह्मचारिपर्य्यन्ताभावे श्रोत्रियो ब्राह्मणः प्रथमं गृह्णाति तदभावे ब्राह्मणमात्रम्। यथाह गौतमः।

श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थमजेरन्निति।
ब्राह्मणमात्रन्तु मनुवचने ब्राह्मणमात्रग्रहणात्।
नारदोऽपि। ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन।
ब्राह्मणस्यैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति॥

पुत्रादीनां पत्नीपर्य्यन्तानान्दायहराणां वानप्रस्थादिविषयेऽपवादमाह योगीश्वरः॥

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिन इति॥

ब्रह्मचार्यत्र नैष्ठिको यतिसाहचर्य्यात्। तेनोपकुर्वाणकस्य धनं पुत्रादिदौहित्रान्तानामसम्भवात्पित्रादय उक्तक्रमेण गृह्णीयुः। क्रमश्चात्र प्रतिलोमो ज्ञेयः। तथा च नैष्ठिकस्य मृतस्य धनमाचार्य्यस्य यतेः सच्छिष्यस्य वानप्रस्थस्य धर्मभ्रात्रेकतीर्थिनः। धर्मभ्राता प्रतिपन्नो भ्राता। तीर्थशब्दस्याश्रमवाचित्वादेकतीर्थ्येकाश्रमी। धर्मभ्राता चासावेकतीर्थी चेत्यर्थः। शिष्यस्य स्वत्वन्तु न सद्वृत्तत्वं दुर्वृत्तपुत्रादीनामपि धनानधिकारस्य प्रमाणान्तरेणैव प्राप्तत्वात्। तच्च वक्ष्यते। किन्त्वध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमत्वं ग्राह्यम्। मदनरत्नकारस्तु वानप्रस्थधनमाचार्य्यो गृह्णीयाच्छिष्यो वेति विष्णुवचनं लिखित्वानुलोममेव क्रमं मत्वा वानप्रस्थधनमाचार्य्याभावे शिष्यो गृह्णीयादित्याह। नन्वनंशास्त्वाश्रमान्तरगता इति वशिष्ठादिवचनैर्नैष्ठिकादीनान्धनसम्बन्धाभावस्य वक्ष्यमाणत्वात्तद्धनग्रहणाधिकारिकथनमत्रानुपपन्नं, न च रिक्थग्रहणस्य तेषां वशिष्ठादिभिर्निषेधेऽपि प्रकारान्तरार्जिततदीयधनाधिकारप्रतिपादकमिदम्भविष्यतीति वाच्यम्। "ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभा" विति स्मृतेर्ब्रह्मचारिणश्च प्रतिग्रहादिनिषेधात्। असंनिचयो भिक्षुरिति यतेर्द्रव्यसंचयस्यैव निषे-

धात्तयोस्तावदुपायान्तरेणार्जनधनाभावोऽपि । वानप्रस्थस्यापि द्द्यादेव न प्रतिगृह्णीयादित्यादिभिः प्रतिग्रहादिनिषेधाद्वा-धनमिति चेत् न । वानप्रस्थस्य तावत्

अन्हो मासस्य षस्णां वा तथा संवत्सरस्य वा ॥
अर्थस्य निचयं कुर्य्यात्कृतमाश्वयुजे त्यजेत् ॥

इति वचनाद्भोजनादिपर्य्याप्तयत्किञ्चिद्धनसंग्रहोऽस्त्येव, यतेरपि।

कौपीनाच्छादनार्थं हि वासो वै बिभृयाद्यतिः ।
योगसम्भारभेदांश्च गृह्णीयात्पादुके तथा ॥

इति वचनाद्वस्त्रपुस्तकादिकिञ्चिदस्त्येव। नैष्ठिकस्यापि शरीरयात्रार्थंवस्त्रादिसम्बन्ध आवश्यकः। तेन मृतानान्तेषान्तत्केन ग्राह्यमित्यपेक्षायान्दायादान्तरापवादेनैतेऽधिकारिण उच्यन्त इति॥

अथ संसृष्टिधनविभागः ॥

तत्र मनुः । विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्यात् ज्यैष्ठ्यन्तत्र न विद्यते ॥

इति अत्र समविभागनियमादेव विषमविभागप्रकारनिरासे सिद्धे ज्यैष्ठ्यन्तत्र न विद्यतइति पुनर्वचनं ज्यैष्ठ्यादिकृत एव विषमविभागो न भवति बह्वल्पधनसंसर्गानुरोधी तु विषमविभागो भवत्येवेति सूचनार्थम् । केचित्तु, संसृष्टद्रव्योपचयांशज्यैष्ठ्यादिकृतो विषमविभागो भवत्येव । संसृष्टद्रव्यविभागस्तु सम एवेत्येतज्ज्ञापनाय ज्यैष्ठ्यमिति वाक्यशेष इत्याहुः। तन्न एतादृशव्यवस्थाया अस्मादप्रतीतेः । समस्तत्र विभागः स्यादित्युक्त्या द्रव्योपचयेऽपि साम्यनियमप्रतीतेः। संसृष्टिविभागेऽप्यविभक्तविभागवत्संसृष्टद्रव्याविरोधेन विद्यादिलब्धस्याविभाज्यत्वन्तु तुल्यमेव प्राप्तमपवदति बृहस्पतिः।

संसृष्टिनान्तु* यः कश्चिद्विद्याशौर्य्यादिनाधिकम् ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

* संसृष्टानान्तु—पा० २ । ३ पुस्तकयोः ।

संसृष्टिता च पित्रादिनैव कर्त्तव्या नान्येन विभक्तो यः पुनः पित्रेत्यादि प्राक्लिखितबृहस्पतिवचनादिति वक्ष्यः। बयन्तूपलक्षणमपि पित्रादिग्रहणमित्यादि प्रागेव प्रपञ्चितम्। अविभक्तविभागात्संसृष्टिष्वपि मिथो विभागकरणात्प्राग् यो मृतस्तस्य पुत्राः प्रमीतपितृतो भागकल्पनेति वचनात् स्वस्वपित्रंशं विभज्य गृह्णीयुः। यस्य तु संसृष्टिनो मृतस्य पुत्रादयो न सन्ति तद्धनग्रहणे पत्नीत्यादिवचनात्पत्न्यादीनां प्राप्ते तदपवादत्वेन स्वर्य्यातस्य ह्यपुत्रस्यैवेत्यनुवृत्तावाह योगीश्वरः। संसृष्टिनस्तु संसृष्टीति। तु शब्दात्पूर्वापवादः। अपुत्रस्य संसृष्टिनोमृतस्यधनं संसृष्ट्येव गृह्णीयान्न पत्न्यादिरित्यर्थः। एतेन पत्न्याद्य पुत्रधनग्रहणाधिकारिगणे भ्रातृधिकारावसरे वचनमिदं प्रवर्त्तत इति व्याचक्षाणो जीमूतवाहनो भ्रान्त एवेत्यवसेयम्। अस्याप्यपवादः। सोदरस्य तु सोदरः।

दद्याच्चापहरेच्चांशञ्जातस्य च मृतस्य च।

इति। संसृष्टिनः संसृष्टीत्यत्रापि सम्बन्धः। तथा चायमर्थः। सोदरः संसृष्टी संसृष्टिनः सोदरस्य जातस्य पुत्ररूपेणोत्पन्नस्यांशन्दद्यात्तत्पुत्राय दद्यादिति यावत्। मृतस्य पुत्रादित्रयरूपेणाप्यजीवतोरंशमपहरेदात्मसात्कुर्यात् स्वयमेव गृह्णीयादित्यर्थः। पदद्वयानुषङ्गं विनैव व्याख्याने तु शब्दबलायातमस्य पूर्वापवादत्वं भज्येत। एवञ्च सोदरासोदरसंसृष्टिसद्भावे सोदर एव संसृष्टी सोदरसंसृष्टिधनग्रहणाधिकारी न भिन्नोदर इति पूर्वोक्तापवादः। यत्र तु भिन्नोदर एव संसृष्टी सोदरान। तत्र द्वयोर्विभज्य पुत्रादिरहितभ्रातृधनग्रहणमित्याह।

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।

असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृज इति॥

इति ॥

अत्रासंसृष्टिपदङ्काकाक्षिवत्पूर्वोत्तरार्धयोरपि* संबध्यते। तथा संसृष्ट इत्यपि। तत्र पूर्वार्द्धे एकोदरसंसृष्टः सहोदर इत्यर्थः। उत्तरार्द्धे तु संसृष्टित्वार्थकमन्यमातृज इत्यनन्तरश्चैवकारोऽध्याहार्य्यः। ततश्चायमर्थः। अन्योदर्य्यो सोदरोऽपि संसृष्टो चेद्धनं हरेत्। असंसृष्टो चेदन्योदर्यो न हरेत्। तथा चान्वयव्यतिरेकप्रदर्शनेन भिन्नोदरस्य संसृष्टित्वमेवैकं धनग्रहणकारणं न भ्रातृत्वमात्रमित्युक्तं भवति। तथासंसृष्टः सोदरोसंसृष्टोऽपि चेद्धनं हरेत्किमुत ससृष्टो। संसृष्टः संसृष्टोऽप्यन्यमातृज एवैको धनन्न हरेत् किन्तु सोदरेण संसृष्टिनापि सह विभज्य गृह्णीयात्। अत्रायं पर्य्यवसितोऽर्थः। असंसृष्टिसोदरे संसृष्टिभिन्नोदरे च सत्यपुत्रभ्रातुर्धनं सोदरत्वसंसृष्टित्वरूपैकैकधनग्रहणकारणयोगात्समं विभज्य गृह्णीयाताम्। सोदरोऽपि चेत्संसृष्टो कारणद्वययोगेन बलवत्त्वात्सर्वं स एव गृह्णीयादिति। अत्र चैकैकनियमेनार्थादपरकारणनिराससिद्धावपि दृढीकरणाय पुनस्तन्निरासः। उभयथापि वाक्यव्युत्पत्तेः। पुलिङ्गञ्च संसृष्टीत्यादावविवक्षितमतएव मनुना सोदरभगिनीनामपि तद्धनग्रहणमुक्तम्। अथाह।

विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि।

इति संसृष्टिविभागमुपक्रम्य।

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।

म्रियेतान्यतरो वापि तस्य भागो न लुप्यते।

सोदर्य्या विभजेयुस्तं समेत्य सहिताः समम्॥

भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभय इति॥



* र्द्धयोरपि—पा० १। पुस्तके।

येषां संसृष्टिनां मध्येऽन्यतरः संसृष्टी ज्येष्ठः कनिष्ठोऽपि मध्यमो वांशप्रदानतो हीयेतानधिकार्यंशप्रदाने स्यात् । सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिः । विभागकाले पातित्येनाश्रमान्तरपरिग्रहेण वा म्रियेत वाऽगृहीतभाग एव तर्हि तस्य भागो न लुप्यते पृथगुद्धरणीयः । स च प्रथमं तत्पुत्रादिभ्यो देयः तदभावे सोदर्य्या भ्रातरो संसृष्टा अपि समेत्य देशान्तरगतास्तत आगत्य सहिता मिलिताः, ये च भ्रातरो भिन्नोदरा अपि संसृष्टाः संसृष्टिनः सनाभयो मृतस्य सहोदरा भगिन्यश्च सममवैषम्येण विभजेयुर्विभज्य गृह्णीयुरित्यर्थः । अत्र सोदरभ्रातृभगिनीनामसंसर्गेऽपि संसर्गे च भिन्नोदराणामपि धनाधिकारमभिदधता मनुना योगीश्वरोक्त एवार्थः स्पष्टमुक्तो भवति । अत्र श्रीकरः । संसृष्टिनस्तु संसृष्टीत्यस्यासोदरसंसृष्टिमात्रविषयत्वेऽन्यानपेक्षत्वात् सोदरस्य तु सोदर इत्यस्याप्यसंसृष्टसोदरमात्रविषयत्वे तथात्वादसोदरे संसृष्टिनि सोदरे चासंसृष्टिन्युभयोः प्राप्तौ यदि द्वयमेव प्रवर्त्तते तदाऽनयोरन्य*सापेक्षयोरुभयोर्विधायकत्वं स्यात् । नचैकस्य सापेक्षनिरपेक्षोभयरूपतया विधायकत्वं विधिवैषम्यापादकमुचितम् । यथा द्वयोः प्रणयन्तीत्यस्य न वैश्वदेवउत्तरवेदिमित्यादिनिषेधकृतविकल्पसापेक्षं पर्वद्वये विधानमन्यपर्वद्वये तु निरपेक्षमिति सप्तमाधिकरणे विधिवैषम्यभयादन्यथासिद्धान्तितम् । तथाचासोदरे संसृष्टिन्यसंसृष्टिनि च सोदरे उभयोरप्रवृत्तौ न कोऽपि तद्धनं गृह्णीयादित्यापतेत् । अतः संसृष्टिनस्त्वित्यनेन संसृष्टिधने संसृष्टिनोऽधिकारउक्तो तदपवादोऽयं सोदरस्य त्विति । तथा च संसृष्टिनो-

* प्राप्तावन्योन्येत्येव—पा० १ । २ । पुस्तकयोः ।

प्यसोदरस्य सोदरे संसृष्टित्वरहितेऽपि सति नाधिकार इत्याह तन्मीमांसानयतत्त्वालोचननिबन्धनमभिधानम् न हि द्वयोः क्वचिन्निरपेक्षयोः प्रवृत्तयोः शास्त्रयोः क्वचिदुभयविषयसमावेशवशादेव प्रवृत्तिमात्रेण वैरूप्यमवतति तथा सति केवलोद्गातृप्रस्तोत्रापच्छेदे* निरपेक्षयोः सर्वस्वदात्रिपृथशास्त्रयोर्युगपदुभयापच्छेदे प्रवृत्त्यभावाद्विरोधाभावेन किञ्चिन बाध्यतइति विचारो निर्मूलः स्यादपच्छेदनये। तस्मात् क्वचिद्विध्यन्तरबाधनिरपेक्षविधानं क्वचित्तद्वाधसापेक्षं चेत्तदा वैरूप्यं यथोपात्तवपन्तीत्यत्र प्राङ्निरूपितम्। अन्यथा चतुर्होत्रापौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामित्यनयोरुपांशुयागाग्नीषोमीयविषयऐन्द्रदध्यैन्द्रपयोविषये चैकैकशः प्रवृत्तयोरुभयोः साधारणयोर्हविषि विषयसमावेशेऽप्येकमपि न प्रवर्त्तेत। यदपि स्वयमुपवर्णितं संसृष्टिनस्त्वित्यस्यापवादः सोदरस्यत्वित्यादिरिति तदप्यसम्बद्धं विनिगमकाभावेन वैपरीत्यस्यापि सम्भवात्। पौर्वापर्य्यमात्रस्याप्रयोजकत्वात्। यच्चान्योदर्य्यवचनं संसृष्टिनस्त्वित्यस्यैव विवरणार्थमित्युक्तं तेन वचोभङ्ग्यानर्थक्यमेव तस्योक्तम्। किञ्च सोदरेऽसंसृष्टिनि संसृष्टासोदरापवादार्थसोदरवचनस्य वर्णनात्सोदरासोदरयोरुभयोरप्यसंसृष्टित्वे प्रवृत्त्यभावात् तुल्याधिकारोऽनधिकारो वा द्वयोरपि स्यात्। अथात्रापि सोदरवचनमेव प्रवर्त्तते तर्ह्यत्र संसृष्टिवचनबाधसापेक्षमन्यत्र तु तन्निरपेक्षमिति प्रत्युत तत्रैव त्रिविधवैरूप्यम्। यथा सौमिकी वेदिर्यदि दीक्षणीयादिष्वतिदेशप्राप्तदर्शपौर्णमासिकवेदिबाधेन विधीयेत तर्हि तत्रातिदेशबाधसापेक्षस्तद्विधिरन्यत्र तन्निरपेक्ष इति वैरूप्यादवेदिमद्विषयकत्वमेव तस्य व्यवस्थापितं तन्त्रे। अस्मन्मते तु व्याख्यातरीत्या द्वयोर्भिन्नविषय-

* प्रतिवच्छेदे—पा० १ पुस्तके।

त्वेनानर्थक्यवैरूप्ययोर्न प्रसक्तिरिति कृतं विस्तरेण । स्मृतिचन्द्रिकाकारस्त्वाह येषां ज्येष्ठः कनिष्ठो वेत्यादि मनुवचने चशब्देन सोदरभ्रातृभगिन्यसोदरसंसृष्टभ्रातृणामितरेतरयुक्तानां विभागकर्तृत्वागतेः संसृष्टभिन्नोरभ्रातरस्तैः सहिताः सोदर्याः स नाभयो भगिन्यश्च तमलुप्तं भागं समं विभजेरन्नित्यन्वयान्मिलितानामेव कर्तृतायाः समेत्य सहितशब्दाभ्यामवगतेर्योगीश्वरवचसा संसृष्टिसोदरसद्भावे भिन्नोदरस्यानधिकारावगतेरस्ति तावदनयोर्विरोधः, तद्विरोधपरिहारार्थं केचिदेवं मानवं व्याचक्षते । तमलुप्तभागं सोदरा यदि संसृष्टास्तदातएव गृह्णीयुर्नासंसृष्टिनः सोदरा अपि । संसृष्टसोदराभावे सर्वे सोदराः समेत्य मिलित्वा सहिताः समप्रधानभावेन समन्यूनाधिकं विभजेरन् सोदराणामभावे सनाभयो भगिन्यस्तासामप्यभावेऽन्योदर्य्या इति । तदेतदनेकाध्याहारदोषादतिक्लिष्टत्वाच्चोपेक्षणीयम् । विज्ञानेश्वरेणापि मानवसंवादायान्योदर्य्यस्तु संसृष्टो नान्यादर्यो धनं हरेदिति पाठेन योगीश्वरवचनस्य यत्तदप्यावृत्त्यध्याहारादिना क्लिष्टमत्यन्ताप्रतीयमानार्थकं स्वप्रज्ञाविलसितमाचम् । तस्माद्यथाप्रतीयमानार्थकयोरेव मनुयोगीश्वरवाक्ययोर्विषयव्यवस्थयैवाविरोधो वाच्यो नातिक्लिष्टकार्थ्येनेति सैवोच्यते । स्थावरजङ्गमात्मकोभयविधधनसद्भावे मनुवचनं संसृष्टानां भ्रातॄणां भगिनीनाञ्च विभज्य ग्रहणं बोधयति योगीश्वरवचस्तु केवलस्थावरसद्भावे केवलतदितरद्रव्यसद्भावे वा तद्विषयम् ॥

अन्तर्द्धनन्तु यद् द्रव्यं संसृष्टानान्तु तद्भवेत् ॥

भूमिं गृह्णन्त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः" इति प्रजापतिस्मृतेः ।

द्रव्यमिति गोबलीवर्दन्यायेन प्रकटस्य द्विपदचतुष्पदादिरूपस्य जङ्गमद्रव्यस्य ग्रहणम् । संसृष्टानां भिन्नोदराणामिति शेषः। योगीश्वरवचसि नान्योदर्य्यादिति पाठः। तस्मात् केवलस्थावरसद्भावे केवलजङ्गमसद्भावे च योगीश्वरवचनादसंसृष्टोऽपि सोदरस्तद्गृह्णीयान्न तु संसृष्टोऽपि भिन्नोदरः। उभयविधधनसद्भावे तु प्रजापतिवचनोक्तव्यवस्थायां संसृष्टाः सोदरा भ्रातृभगिन्यः संसृष्टा भिन्नोदराश्च विभज्य गृह्णीयुः । मनुवचनस्याप्येतदर्थत्वैवेति। तदसत्। अध्याहाराक्लिष्टतादिदोषस्य तत्राप्यनपायात् । प्रजापतिवचनोक्तव्यवस्थाया विज्ञानेश्वरीयव्याख्यानेऽप्यविरोधात् । अतएव मदनरत्नकृता तद्व्याख्यानमभ्युपेत्यैव प्रजापतिवचनमपि व्यवस्थापकतया पठितम्प्रत्युत भवद्व्याख्याने योगीश्वरवचने पौनरुक्त्यं दुष्परिहरमापद्यते। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेदित्यनेनोक्तस्यैवार्थस्य संसृष्टो नान्यमातृज इत्यनेनान्यूनानतिरिक्तस्य प्रतिपादनात् । मानवसंवादिनोपुनरुक्तस्यार्थस्य क्लेशेनापि वक्तुं शक्यत्वे मूलभूतश्रुत्यन्तरकल्पनागौरवापादकस्यार्थान्तरस्य कल्पयितुमनुचितत्वाच्च। याज्ञवल्क्यस्मृतिटीकायां शूलपाणिः। अन्योदर्य्यः संसृष्टी नान्योदर्य्यधनंगृह्णीयात्। असंसृष्टरपि सोदर एव गृह्णीयात्। न तु संसृष्टः सापत्नभ्राता। नान्योदर्य्यो धनं हरेदिति पाठे अन्योदर्य्यः सत्संसृष्टरपि धनं न गृह्णीयादिति व्याख्या असंसृष्टिसोदराधिकारार्थमिदं वचनमतो न पुनरुक्ततेत्याह तत्तु श्रीकरमतसमानयोगक्षेमम्। रत्नाकरकृत्त्वाह यस्तु कल्पतरौ नान्योदर्यो धनं हरेदिति पाठो दृश्यते समूलभूतयाज्ञवल्क्यमिताक्षरापारिजत-

हलायुधग्रन्थेषु नान्योदर्य्यो धनं हरेदितिपाठदर्शनात्तदनुसारिव्याख्यानदर्शनाच्च लिपिप्रमाद एवेति। दायतत्त्वकारस्तु सोदरे संसृष्टिनि संसृष्टिन्यसोदरे च सतरस्तावद्गृह्णीयात्। एवं सोदरासोदरयोः संसृष्टिनोः सद्भावे इतर इत्यत्र प्रथम आह। अन्योदर्य्यस्त्विति। अन्योदर्य्यः पुनः संसृष्टी सन् गृह्णीयान्नान्योदर्य्यमात्रः। किन्त्वसंसृष्ट्यपि पूर्ववचनस्थसोदरपदानुषङ्गात्सोदरो गृह्णीयात्। तत्रैकविषये पूर्ववचनोक्तसोदरत्वसंसृष्टित्वयोरेकशः सम्बन्धेन तुल्यत्वाद्विज्य ग्रहणमेतदुभयसत्त्वे वासोदरस्यासंसृष्टिनोतुल्यरूपत्वान्नेति द्वितीय आह। संसृष्टीनान्यमातृज इति। सोदरे संसृष्टे सत्यन्यमातृजः संसृष्टेपि न गृह्णीयात्। अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात्। संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वादित्याह तदपि मिताक्षरादिसम्वाद्येव व्याख्यानकौशलन्त्वधिकम्। यदा तु संसृष्टः पिता पितृव्यो वा नास्ति तदाऽसंसृष्टभिन्नोदरो गृह्णीयात्। तदभावे त्वसंसृष्टः पिता। तदभावे तत्पत्नी। तथा च शङ्खः। "स्वर्य्यातस्य ह्यपुत्त्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी"ति। स्वर्यातस्यापुत्रस्य संसृष्टस्य संसृष्टाभावे भिन्नोदरासंसृष्टिभ्रातृगामि द्रव्यमित्यर्थः। तेन संसृष्टधनविषये यथास्थितमेवेदं वचनमिति स्मृतिचन्द्रिकामदनरत्नकारावाहतुः। संसृष्टभ्रातृविषयमेवैतत्तेन पितृपत्न्योस्तदभाव इति न विरुद्धमिति मिताक्षराकारादयः। स्मृतिचन्द्रिकायां शङ्खवचने ज्येष्ठग्रहणं सुसंयतत्वादिगुणवत्त्वकथनार्थं न तु मध्यमादिनिवृत्त्यर्थम्। पुनरपि तदभावइति वक्तव्ये वाशब्दः प्रयुक्तःफलसाम्यात्। तथाहि वाशब्दाद्विकल्पः प्रतीयते। न चात्र स्वाम्यभूते* वस्तुनि तुल्यावगतेः फलसाम्य-

* स्वाम्यरूपे—पा० १। पाठः।

मस्त्येव। एवं चायं क्रमः भ्रातृभावे पिता तदभावे माता तदभावे ज्येष्ठा पत्नीति मदनरत्ने तु मातापित्रोर्विपरीतक्रमः। मिताक्षरोक्तन्यायाद्विभक्तासंसृष्टविषयविष्णुवचनवदत्र न्यायबाधकवचनाभावाद्विति तदाशयः। अतएव पत्नी दुहितर इति वचने विष्णुवचनानुरोधेन स्मृतिचन्द्रिकायामपितरावित्यत्र प्राक् पिता तदभावे मातेत्येव तत्रोक्तम्। प्रपञ्चितञ्चैतद्विस्तरेणास्माभिः प्रागेव। ततश्च मदनरत्नो* दुहित्रादिक्रमविरोधादविरोधायैतत्संसृष्टभागविषयमिति कल्पते विभक्तोक्तनैयायिकपत्नीदुहित्रादिक्रमोऽत्र वाचनिकक्रमेण बाध्यते। अस्मिन् क्रमे कस्य चिन्न्यायस्याभवाद्वाचनिक एवायं क्रमः, नारदोऽपि।

मृते पत्यौ तु भार्य्यास्तु अभ्रात्रपितृमातृकाः।
सर्वे सपिण्डास्तु धनं विभजेयुर्यथांशत इति॥

अस्यार्थः। भार्य्याः पत्न्यः। अभ्रातृपितृमातृकाः याः पत्युर्भ्रातृपितृमातरस्तदभावविशिष्टा इत्यर्थः। अत्र द्वन्द्वसमासे भ्रातृपित्रर्याभ्यर्हितपित्रादिपदपूर्वनिपातं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्रधनं प्रथमं भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे तत्तस्यपत्न्यभिगामीति दर्शितम्। एवञ्च संसृष्टपत्नीनां मुख्यगौणपुत्राभावे न प्रथमन्दायहरत्वं किन्तु संसृष्टिसोदरभिन्नोदरभ्रातृपितृमातृणामप्यभावे इति द्रष्टव्यम्। सर्वे सपिण्डास्त्वित्यादेस्त्वयमर्थः। संसृष्टापुत्रस्य ये भ्रातृपितृमातृव्यतिरिक्ताः सपिण्डा भ्रातृपुत्रादयस्ते स्वधनम्पूर्वमपुत्रधनेन सह स्वपित्रादिना संसृष्टन्तदूर्ध्वन्तत्पत्नीभिः सहयथांशतो भ्रातृपुत्राणां भ्रात्रंशो भार्य्याणामवंश इत्येवमंशानतिक्रमेण विभजेयुरिति। पत्न्य-

* विवदन्—पा० १। पुस्तके।

भावे संसृष्टापुत्रांशन्तद्भगिनी लभते। तथा च बृहस्पतिः॥

या तस्य भगिनी सा तु ततोंशं लब्धुमर्हति॥

अनपत्यस्य धर्म्मोऽयमभार्य्यापितृकस्य च॥

अमातृकस्य चेति चशब्दार्थः भगिन्यभावे केवलाः सपिण्डा अनन्तराः सपिण्डास्तद्दायं विभजेरन् यथांशतः तस्य तस्य धनस्य वेदिति मनूक्तप्रत्यासत्तिक्रमेण लभेरन्। प्रतिपदोक्तानामभावात्। तथा च स एव॥

मृतोऽनपत्योऽभार्य्यश्चेदभ्रातृपितृमातृकः।

सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः॥

तद्दायं संसृष्टिदायम्। मृतोऽनपत्यइत्यादेः प्रतिपदोक्तसंसृष्टधनग्राहिरहितश्चेदित्यर्थः। सपिण्डाभावे तु विभक्तास्तधनवदेव संसृष्टः स्वर्य्यातद्रव्यमपि प्रागुक्तक्रमेण प्रत्यासत्तितारतम्येन समानोदकादिगामीति द्रष्टव्यम्। संसृष्ट द्रव्यमधिकृत्य सपिण्डेभ्य ऊर्द्ध्वं विशेषास्मृतेरिति। ननु सत्यपि पत्न्यादौ वचनान्मृतसंसृष्टिधनस्य संसृष्टिभ्रात्रादिग्राह्यत्ववत् संसृष्टासंसृष्टपुत्रसद्भावेऽपि पितृधनस्याप्येतद्वचनबलात् संसृष्टि पुत्रमात्रग्राह्यत्वमस्त्विति चेत् न। अपुत्रस्येति पूर्ववचनस्यस्यानुषङ्गादपुत्रसंसृष्टिमरणस्य धनग्रहणकारणत्वात् संसृष्टिनश्च पुत्रेणापुत्रत्वाभावात्संसृष्टिनस्त्वित्यस्याप्रवृत्तं विभजेरन् सुताः पित्रोरिति वचनात्पितृंशे पुत्रयोर्द्वयोरत्रापि समभागभागित्वम्। प्राक्तनः स्वांशः परं संसृष्टपुत्रेण भुक्तावशिष्टः पृथगुद्धरणीयः। पितुर्यावांस्तदानीं विद्यमानोंऽशः स संसृष्टासंसृष्टाभ्यां विभज्य ग्राह्यः। न च संसृष्टिनस्त्वित्यत्रापुत्रपदानुषङ्गोऽस्त्विति वाच्यम्। सपुत्रसंसृष्टि भ्रात्रादिधनेऽपि पुत्रादिबाधेन तदंशस्य भ्रात्रादिग्राह्यतापत्तौ सकलदेशीया-

नादिव्यवहारविरोधापत्तेः। अन्यथा पुत्रवदपुत्रसाधारणस्यापुत्रमात्रविषयपत्न्यादिवाक्यापवादकत्वानुपपत्तेस्तद्बोधकतुशब्दविरोधापत्तेश्च। न च भ्रात्रादिसंसृष्टिन एवापुत्रविशेषणं व्यावर्त्तकत्वात्पुत्रसंसृष्टिनस्तु न व्यावर्त्याभावाद् असम्भवाच्च सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेरिति वाच्यम्। पृथग्वाक्यद्वयाभावादेकत्र च वाक्ये क्वचिद्विशेषणपुरस्कारेण क्वचिच्च तदपुरस्कारेण विधिप्रवृत्तौ विशेषणघटिताघटितवाक्यार्थद्वयनिबन्धनविधिवैषम्यरूपवाक्यभेदापत्तेः। किञ्च पित्रादिद्रव्यस्वाम्ये पुत्रत्वादिकमेवाप्रतितत्वादिविशिष्टप्रयोजकन्न तु संसृष्टत्वविशिष्टमपि गौरवात् तच्च सर्वेषां संसृष्टानामसंसृष्टानाञ्च तुल्यमिति सर्वेषामेव पुत्रादीनामविशेषेण तद्धनग्रहणमुचितम्। न च विभागेन पित्रादिद्रव्यार्हत्वापगमः। सर्वेषु पुत्रेषु विभक्तासंसृष्टिष्वपुत्रवद्भार्यादीनामेव तत्र धनाधिकारापत्तेः। प्रत्युतापस्तम्बेन हारीतेन च विभागोत्तरमपि पितापुत्रयोः परस्परधनाधिकारप्रतिपादनाच्च। यथाहतुस्तौ। "जीवन्नेव वा विभज्य वनमाश्रयेद् वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेद् यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेदिति"। वृद्धाश्रमं पारिव्राज्यम्। उपदस्येद्द्रव्याभावेन क्षीयेत्। विभक्तजे तु सति पूर्वविभक्तानां पुत्राणां प्राप्नोति पितृधनाधिकारो बृहस्पतिवचनेनापोद्यते। यथाह सः:

अनीशाः पूर्वजाः पित्रोर्भ्रातुर्भागे विभक्तजः।
पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम्॥
विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः॥

